# I. DHÛRTASAMÂGAMA.

हर्षादम्भोजजन्मप्रभृतिदिविषदां संसदि प्रीतिमत्या
श्वश्र्वा मौलौ पुरारेर्दुहितृपरिणये सान्नतं चुम्ब्यमाने।
तद्वक्त्रं मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो
दृष्ट्वा तद्वृत्तमाशु स्मितसुभगमुखः पातु वः पञ्चवक्त्रः ॥१॥

अपि च।

वक्त्राम्भोरुहि विस्मिताः कबकिता वक्षोरुहि स्फारिताः
श्रोणीसीमनि गुम्फिताश्चरणयोरक्ष्णोः पुनर्विस्तृताः।
पार्वत्याः प्रतिगात्रचित्रगतयस्तन्वन्तु भद्राणि वो
विद्रुत्यान्तिकपुष्पसायकशरैरीशस्य दृग्भक्तयः ॥२॥

नान्द्यन्ते सूत्रधारः। यदद्य

नानायोधनिरुद्धनिर्जितसुरत्राणत्रसद्वाहिनी-
नृत्यद्भीमकबन्धमेलकदलद्भूमिभ्रमद्भूधरः।
अस्ति श्रीनरसिंहदेवनृपतिः कर्णाटचूडामणि-
दृप्यत्पार्थिवसार्थमौलिमुकुटन्यस्ताङ्घ्रिपङ्केरुहः ॥३॥
तस्योद्दण्डभुजप्रतापदहनज्वालानिरस्तापदो
राज्ञः सर्वगुणार्थवादपदवीविद्योतनाचार्यकः।
यो धीरेश्वरवंशमौलिमुकुटो दातावदाताशयः
तस्य श्रीकविशेखरस्य कविता मच्चित्तमालम्बते ॥४॥

तदनेन सकलसंगीतविद्याशेषविशेषविद्योतनाभिनवभरतेन पुरस्-थनपदारविन्दद्वन्द्ववन्दारुकरपल्लवेन निखिलभाषोपभाषासुभगं-

---

2. D चुम्ब्यमानो 3. D तद्वक्त्रे 4. BC तद्वक्त्रं st. तद्वृत्त° 6. DLC विस्तृताः st. विस्मिताः 9. C दृग्भङ्गयः 11. B निर्बद्ध°; C निब° st. निरु° 13. D कार्णाट. 14. D दृप्य° 15. LD तस्योच्चुक्त° 16. DL गुणानुवाद B गुणार्थराग C गुणानुराग. 17. B तिलको st. मुकुटो 19. DL om. विद्याशेष. DL सुभं C सुभग st. °गं, das in B. f.

आवुकसरस्वतीकण्ठाभरणेनानवरतसोमरसास्वादकषायकण्ठकन्दलीनटीनृत्यमानमीमांसामहोत्सवेन रामेश्वरस्य पौत्रेण तत्रभवतः पवित्रकीर्तेर्धनेश्वरस्यात्मजेन महाशासनश्रोणिशेखरश्रीमत्सालिजन्मभूमिना कविशेखराचार्यश्रीज्योतिरीश्वरेण निजकुतूहलविरचितं धूर्तसमागमनाम प्रहसनमभिनेतुमादिष्टोऽस्मि। तस्य चादिष्टमवश्यमिदं मालतीमालेव मया शिरोधरणीयम्। तथा हि।

कर्पूरन्ति सुधाद्रवन्ति कमलाहासन्ति हंसन्ति च
प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च।
त्रैलोक्याङ्गनरङ्गलङ्घिमगतिप्रागल्भ्यसंभाविताः
शीतांशोः किरणच्छटा इव जयन्त्येतर्हि तत्कीर्तयः॥५॥

अपि च।

के नार्चिता दिविषदः कति न द्विजेशाः
संतर्पिता न कवयः कति पूजिता वा।
के वार्थिनः प्रतिदिनं न कृताः कृतार्थाः
त्यागप्रसादपटुना कविशेखरेण॥६॥

तत्प्रेयसीमाहूय संगीतकमवतारयामि। नेपथ्याभिमुखमवलोक्य। आर्ये। इतस्तावत्।

प्रविश्य नटी। अज्ज। एसम्हि। आणवेदु अज्जो। को णिओओ पत्थाईकरीअदुत्ति।

सू०। आर्ये। अपि न जानासि।

पञ्चत्वारि शतानि बन्धघटनालंकारभाञ्जि द्रुतं
श्लोकानां विदधाति कौतुकवशादेकाहमात्रे कविः।
ख्यातः क्ष्मातलमण्डलेष्वपि चतुःषष्टेः कलानां निधिः
संगीतागमसागरो विजयते श्रीज्योतिरीशः कृती॥७॥

तद्विरचितं धूर्तसमागमनाम प्रहसनमभिनेतुमारब्धम्। इति गी-

2. DL °महोत्सवस्य. 3.4. DL शिखराभापत्पली° 4. C कुल n. निज 5. B °गमनाम C° गमं नाम 6. BC °दिष्टं मयावश्यं मा... शिरसा ध° 14. DL चार्थिनः 16. BDL अवतरामि 23. D ख्यातक्ष्मा° DL कलाया st. कलानां. 24. BC नागरो st. सागरो.

यतां नाट्योचितं किं चित्।

न॰ आणवेदु अज्जो। को एत्थ पबन्धे पहाणो रसो जं उद्दिसिअ गाइस्सं।

सू॰ नन्वयमुत्फुल्लनवमाधवीमकरन्दसान्द्रामोदमत्तमधुकरनिकरझंकारमुखरो वसन्तः संततोज्जृम्भितानङ्गशृङ्गार एव। तथा हि

विकसितनवमल्लीकुञ्जगुञ्जाद्द्विरेफः
कुसुमितसहकारश्रेणिनिर्यत्परागः।
प्रमुदितपिककण्ठप्रोच्छलन्मञ्जलश्री-
रपहरति मुनेरप्येष चेतो वसन्तः ॥८॥

न॰ मलआणिलचालिअचूअवणो कलअण्ठविमोहिअकामिमणो।
मअरन्दविमत्तमिलिन्दमुहओ सुरहीकिअसव्वदिसामुहओ ॥९॥
एसो वसन्तमासो मुणिअणसत्थस्स राअरहिअस्स।
उम्मूलिअ गुरुधिज्जं करेइ वम्महवसं हिअअं ॥१०॥ इति गायति।

नेपथ्ये।

दण्डकमण्डलुमण्डितहस्तः सुललिततिलकविभूषितमस्तः।
अयमुपसर्पति जङ्गमलोभः चलकाषाययपटार्पितशोभः ॥११॥

न॰ अज्ज। को एसो परिक्खलन्तपिण्डोदकासाअवसणो दण्डकुण्डिआहत्थो धुत्तो विअ इदो तदो विलोअअन्तो दीसदि।

सू॰ आर्ये। न जानामि।

यः श्रूयते जनमुखाद्भगवान्क्रियावा-
नाचारधर्मरहितो गणिकाभिलाषी।

---

2. BC अज्ज। कं समअं उद्दिसिअ गाइस्सं। 4. B नन्वयमु॰ DL ननु प्रो-त्फुल्लमालतीमक॰, om. निकर 5. B सर्वतोज्जृ॰ C मुखरः सर्वतो जृ.... ङ्गार वसन्तानन्द एव। 6. C पुञ्ज st. कुञ्ज 8. BC प्रोल्लसन् st. ॰च्छलन् 10. DL कल-कण्ठ॰ BDC सराहिद st. विमोहिअ L कामिअणो 11. a. किद st. किअ. 13. B उम्मूलिअ गुरुअधीरं L गरुधीरं B सम्महहदं C ॰हअं 17. D एसो मुडिअ-मुंडापिंडो a. पिण्डोअकसा॰ 18. D आसिहंटिकिदलालाडपट्टो v. धुत्तो. 19. B अपि v. न 20. L तुरग st. भगवान्. 21. DL गणिकाविलासी.

दीर्घोर्ध्वपुण्ड्रकमण्डलुदण्डलक्ष्मा
पुष्णाति विघ्ननगरः किल दम्भमुग्रम् ॥ १२ ॥

तदेहि । एतस्य दर्शनं दूरत एव परिहरणीयम् । इति निष्क्रान्तौ ।

इति प्रस्तावना ।

---

ततः प्रविशति यथानिर्दिष्टः स्नातकेनानुगम्यमानो विघ्ननगरः ।

वि॰ सानिर्वेदम् ।

हृदयकमलमध्ये निर्गुणो निष्प्रपञ्च-
स्त्रिभुवनपतिरेको ध्यायते योगिभिर्यः ।
तमहमजरमाद्यं ध्यानमात्रैकगम्यं
मधुमथनमचिन्त्यं संततं चिन्तयामि ॥ १३ ॥

स्ना॰ समन्तादवलोक्य । अहो रमणीअदा वसन्तस्स । जदो

उम्मीलन्ति पलासं रइरसकुसला छप्पआ रम्मपक्खा
कन्ताबद्धाणुरत्ता महुरसभरिअं माणुराअं पिअन्ति ।
उग्गाअन्ति फुरन्ता तिहुअणजइणो कामराअस्स कित्तिं
संवित्तिं हारअन्ता पिअअणविरहे कोइला कामिणीणं ॥ १४ ॥

अवि अ ।

जे कप्पूरं हरन्ता कमलवणसिरिं चोलअन्ता सहारं
साहाओ कम्पअन्ता णिट्टुअणसुहआ चन्दणाणं वणाणं ।
ते कन्दप्पस्स मित्ता रइरसरभसं दीहदीहं कुणन्ता
तेलोक्कं मोहअन्ता मलअगिरिहारिणो सीअला एन्ति वाआ ॥ १५ ॥

ता कधं एसो अदिदूसहो वसन्तसमओ मए एक्कलसरीरेण साहिदव्वो । इति वैमनस्यं नाटयति ।

---

1. BL लक्ष्यः st. लक्ष्मा. 3. BLC om. एहि. L. एवाहरणीयम् । 7. D निःप्र°. 9. BLC ज्ञान st. ध्यान. L वेद्यं st. गम्यं. 10. L उदारं st. अचिन्त्यं. 11. C अहो व° र° । 12. L पसूणं st. पलासं, छप्पदा. B सप्पआ. D मम्महन्धा, L वम्मह° st. रम्म°. 13. DLC कन्तारद्धाणु°, L पिवान्ति. 15. B हरअन्तो. 17 BDL सहावं 18. B. साहाभि कम्प.. सुहिदा D। तोरम्मं उव्वहन्ता णिउणजणहिदं D2 u. C °सुहिआ D2 LC मित्ता रइतणुरमणी फेनिदप्पं कुणन्ता 20. BD तिलोअं, LC तेलोअं. L वान्ति st एन्ति DLC अइदू° 21. BL एक्कसरीरेण.

कान्ता: पयसमुकुलकुमलताकुञ्जोदरे शेरते
मज्जत्कुञ्जरदानलोहितजला: क्षुभ्यन्ति तोयाशया:॥१८॥

तद्विज्ञातस्तावदयमेव कमपि गृहस्थमितिनुसराव। इति परिक्रामतः।

शा०। भगतोऽवलोक्य। भो भअवं। पेक्ख पेक्ख। सिविहयमण्णजणमुण्डमाल-कुम्बकुडम्बहिंसीसिम्भलोहन्तवहुम्बालअं इधो तदो संचरन्तबालगोवच्छमो-हिदं पोसुचुञ्जत्यसाणसमारिसलञ्जनसंचाररमासिज्जाभासमरिसंचरन्तवे-लिआतमूहं कस्स वि महाधणस्स वासभवणं विलोईआदि।

नेपथ्ये।
लक्ष्मीविवर्तवशविघ्नितसर्वभोगः
शश्वत्प्रकीर्णधनचिन्तनवीतनिद्रः।
अन्याहृतनामकतया भुवि यः प्रसिद्ध-
स्तस्येदमाश्रमपदं पुरतो विभाति ॥१९॥

शा०। अन्यतो गत्वा। भो भो सामरा। कस्स। इति पृच्छति।

पुनर्नेपथ्ये। आः। क एष नामग्रहणे भवतो निर्बन्धः। अथवा यद्यत-दास्तु। श्रूयताम्। मृताङ्गारठक्कुरस्याश्रमोऽयम्।

वि०। वत्स। अलं विलम्बेन। अस्मद्भाग्यजनाय कोऽयं मृताङ्गारः। तदेहि। आवामाभ्यन्तरमेव प्रविशाव। इत्याबातप्रवेशं नाटयित्वैकान्ते स्थितौ।

ततः प्रविशति कश्मलवेषो मृताङ्गारः।

मृ०।
व्ययशीलः कुबेरोऽपि क्षयं याति दरिद्रताम्।
अपि प्राणाः प्रदातव्या नार्थिभ्यो धनिकैर्धनम्॥२०॥

शा०। उवलुत्ते। भो महाबम्हण। भअवन्तो विक्खणअरचलणा तुम्हाणं गेहे भिक्खं भुञ्जिदुं इच्छन्ति।

---

1. D2LC पल्वल. 2. L मज्ज°, पान C जाल st. दान. BDC लोहित. 3. करणायै-वक° 4. L विहिद° B भअवलुअण. C °जअणमोएड. B om. मुण्ड, मारिम st. °कु 5. D खुंर, C खुत्तु st. खम्भ. L चउलाल, BDC °लअं. C वस्स st. वच्छ. 6. D लो-हिदं पाडे पीसाणि... चारचाररम° B °हिदं तुअत्थाणं अलस-पालिसलजमन्दुसंचालरस° BDC °मासिज्जं आ° B आमासवाले सलचलज्ज° D वावा-लवाडिलरलं, L °परिसरसं° 7. D रेडिआलमुहमोहुत्तं क° ग्रस्स भअणं दीसदि. DLC °भअणं. Danach L भो भो सामरा। कस्स इदं वासभअणं। इति पठति। 8. D। L एव st. यद्य. 9. L चिन्तित st. °तन 11. DC तस्यैतदा° 12. D पुनरन्यतो °, कस्स एदं घरं. L अन्यतो ग° पृ°। भो... कस्स इदं वासभअणं। इति पठति। 13. L °थ्ये। लक्ष्मीत्यादि। वि°। आः। क° 14. DC निर्ब° भवतः 14. BC °दा स्तू° D ए-स्य ठक्कु° 15. L om. वि°। C अस्मद्भाग्यनायको ऽयं. L om अस्म... गारः। 20. D °बम्भण. B om. भअवन्तो D °णअरो तु BL चरणा. 21. C °ञ्जिदुं आअच्छन्ति। D आअदोन्ति, B इच्छदि st. °न्ति।

नृ० सत्यमेतत् । अहो दुर्दैवम् । अस्मात् बहोः कालात् चलतः नगरनरा-
जान् लोकाल्लिहान् सकृदेव पातितो धूमकेतुः । ततः प्रकारोऽत्र
अपिख्याति । विलोक्य । भवत्वेवं तावत् । प्रकाशं साविनयम् ।

स्थाने यस्य चरन्ति भैक्ष्यमनघाः स्नेहेन युष्मादृशाः
स स्वादुच्युतपूतिलेपनवशाद्गन्तः पवित्रालयः ।
किं तस्यत्रातिवेशिविप्रलनिताभ्रातृप्रसक्ताङ्गना
दूती सम्प्रलपेति सूतकमतः स्थानान्तरं गम्यताम् ॥ २१ ॥

वि० स्वगतम् । अहो दुरात्मनोऽस्य व्याजप्रकारः । भवतु । प्रबोधयामि । प्रकाशम् । आयुष्मन् । यतीनामस्माकं कुतः सूतकदोषः । तथा च स्मृतिः ।

न वायुः स्पर्शदोषेण नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां नान्नदोषेण मस्करी ॥ २२ ॥

नृ० साविनयम् । भगवन् । यद्यप्येवं तथापि न संभवति । पश्य ।

अनावृष्ट्या कृषिर्नष्टा राष्ट्रभङ्गाद्रणादिकम् ।
वाणिज्यमल्पलाभेन प्रातराशस्य का कथा ॥ २३ ॥

वा० सक्रोधं संस्कृतमाश्रित्य । अहो । धिक्सनार्यत्वं जलाब्धिजातायाः श्रियः ।

नो जानाति कुलीनमुत्तमगुणं सत्त्वान्वितं धार्मिकं
नाचारप्रवणं न कार्यकुशलं न प्रज्ञयालंकृतम् ।
नीचं क्रूरमपेतसत्त्वमदयं यत्सादरं सेवते
तद्वंशानुगुणः पयोधिसुतया लक्ष्म्या प्रमाणीकृतः ॥ २४ ॥

अरे णइपरत्तोआ दुट्ठवम्हणा । ईरिसे दूसहमक्खणे पढमं तुमं महाघरं पोद्दिअ कुदो आसदो गदुअ अम्हेहिं भिक्खा पाविदव्वा ।

---

1. BD यदेतत्स° D नगरवासिनो मानुषान् ° 2. LC ° घलोकाल्लिहान सद्येव ° C निपातितो L ° तितौ ° केतू । प्रतीकारो st. प्रकारो. 3. L इति विलो° तावत् प्र° सावि° (das Ganze als scen. Bem.) 4. L भैक्ष्यं .. दृशः 5. D चिरौ st. यशाद्. 8. L व्याजव्यवहारः । B त्वं, L ना u. भवतु. BLC प्रवोधयामि॥ 13. C भङ्गादुणा° 14. B°त्यमल्पलाभेन. 15. D धिगम्बुजलाधिजातायाः B° ना-ख्यतं. L धिङ्मौर्ख्यं जलाधिसुतायाः 18. L ° सत्वहृदयं य° 19. L तत्वं ताङ्गुणः, C ° नुगुणं... माणीकृतं. 20. D ईरिसे, C एरिसे. 21. D। उहिलिअ, L. सोथिअ (gegen seine Hs). Dann D आश्रदेहिं अम्हे ° कु° अस° गदुआ पाविदह्मा ।

तु॰। अज्जवं। कीदिसी भिक्खा। कीदिसीए वेलाए। कत्तआइं तेमणाइं।

वि॰। सहर्षम्। श्रूयताम्।

मांसं मत्स्यपटोलतक्रवाटिकावास्तूकशाकं वट:
संजीवन्याथ मुद्गमाषविदलग्रास: प्रकारोत्कर:।
स्वादिष्टं च पयो घृतं दधि घनं रम्भाफलं शर्करा
संक्षेपादिति साध्यतां सुवदने भिक्षा मदीया द्रुतम्॥२६॥

तु॰। विहस्य स्वगतम्। हुं। एसो सहस्सा अम्हाणिस्सजणजोग्गोव्वेव देववरस्स पमाणेण संवसो। प्रकाशमञ्जलिं बद्ध्वा।

एदं सरीरं विरहेण जुत्तं पाणा तहा धम्मफलेक्कसारा।
सव्वं तुहाअत्तमुदारकित्ते का बाहिरे वत्थुणि अत्थि सत्ता॥२७॥

ता अब्भन्तरघरं पावेसिअ वीसमदु अज्जवं। अहं उण भिक्खापआरं करेमि।

ला॰। सोपहासम्। अज्जवं। पेक्ख पेक्ख। संस्कृतमाश्रित्य।

पक्का: कुन्तलराजय: स्फुटकटाहाभौ कपोलावुभा-
वेतस्या: स्तनमण्डलं निपतितं शुष्का नितम्बस्थली।
दन्तपातस्मितभाषितै: शिव शिव प्रस्तौति नेत्रोत्सवं
किं ब्रूम: करवाम वेति किमियं दृष्टा जरत्तापसी॥२८॥

वि॰। धिङ्मूर्ख। किमसाधुजनोचितं प्रलपसि। सुरतप्रियां प्रति। सुभ्रु। गम्यतां पाकशालां प्रति। वयमप्यागच्छन्त एवास्महे।

सु॰। जं अज्जवं आणवेदि। इति निष्क्रान्ता।

ला॰। अज्जवं। जाव भिक्खा सिज्झदि ताव एत्थज्जेव अज्जवं चिट्ठदु। अहं उण अणङ्गसेणाए पउत्तिं जाणिअ लहुं आअच्छामि। उभौ परिक्रामत:।

वि॰। वत्स। सहैव गम्यताम्।

---

1. D किअंति तिम्मणाइं, L ते अलाइं. 3. DL माष st. मत्स्य. L वाडिका (verändert aus वाटिका). B वटं. 4. D संजीविन्याश मुद्गमत्स्य. L मत्स्यमुद्ग. 5. B आडिष्टञ्च. C स्वादिष्टञ्च. BLC नवं st. घनं. 6. D भिक्षार्थमेतद्द्रुतम्। 7. BD हूं. DC वि u. एसो. L अम्हाणिसजणजोग्गो. C देवस्स. 8. BC संवुत्तो st. °वसो. 9. B जोतं. D वाणी st. पाणा. 10 D सव्वं तु दे हत्थे उदारकित्ते. D2 u. C °मुत्ते. 11. L ता अन्तरघ°, वीसमीअदु. C भिक्खोपआरं. 16. DL किं ब्रूम: क°; dafür BC ब्रूम: किं क°. 17. D रे st धिङ्, welches in BC f. B सुभ्रे। पा° प्राति गा° 20. B सिज्झदि ता अ° ए° 21. DL अणङ्गसेणिआए.

का॰। भअवं। मुत्तसालभञ्जसाविहस्स गेहं णं विहारे अणङ्गसेणाए अवस्सं ति मए तुदं। ता तस्सज्जेव अणुसारेण अवेक्खम्ह। (अग्रतो ऽवलोक्य।) भो भअवं। पेक्ख पेक्ख। एसा अणङ्गसेणा तुरविलासिणी विअ विणोईआदि।

वि॰। तदागच्छतातः। एनामुपसर्पाव। उभे कान्ते स्थितौ।

ततः प्रविशत्यनङ्गसेना।

का॰। सहर्षोपसृत्य। भअवं। पेक्ख पेक्ख अणङ्गसेणाए लावण्णलच्छिं।

णीलम्भोरुहपत्तकत्तणअणा संपुण्णचन्दाणणा
उत्तुङ्गत्थणभारभङ्गुरतणू वेइग्ग मज्झे किसा।
बाला मत्तगइन्दमन्दगमणा सुन्देरसोहामई
पुण्णं पञ्चसरस्स मोहणलआ सिङ्गारसंजीवणी ॥ २९ ॥

वि॰। स्वगतम्।

यन्नेत्राञ्चलभङ्गिलाञ्छितमपस्मेराननाम्भोरुहा
यत्कूतकलाविलासवसतिर्यत्कान्तरोमोद्गमा।
यच्चावेङ्गितसंगतां तनुलतामालोक्य गोपायति
प्रायस्तत्कथयत्यनङ्गरचनालङ्के कृशाङ्गी स्थिताम् ॥ ३० ॥

प्रकाशम्। वत्स। सम्यगुपलक्षितम्। तथा हि

यत्तीर्थाम्बु मुखाम्बुजालवरसो नेत्रे नवेन्दीवरे
दत्तश्रेणिरखण्डिताक्षतचयो दूर्वा च रोमावली।
उत्तुङ्गं च कुचद्वयं कलशयुगं पात्रं कराम्भोरुहं
तन्मन्ये मदनार्चनाहितमतिः स्वाङ्गोपहारैरियम् ॥ ३१ ॥

अनङ्गसेनां लक्षीकृत्य।

यत्पूर्वं चरितं तपः प्रतिदिनं या तीर्थयात्रा कृता
यद्भूम्ना पुरुषोत्तमार्चनविधौ चेतः कृतार्थीकृतम्।

1. B °सालभञ्ज साविं° D पर st. गेह, 2. D तुदं मए. BC गच्छम्ह st. अवेक्खम्ह. 3. D° सिसिब, C °सिरीच. BDC गिलोअदि. 4. D° गच्छावैनामुप° 8. C °दण्ड st. °तणू. 9. B गएन्द. D1 मत्तग°, D2 मद्दग° 10. D °करी st. लआ. B मोहणादिआ... गजीअणीं. 12. L नेत्राञ्चल... लाञ्छित°, C °तञ्छित° 14. D यत्कान्तोपकरोत्तमां तनु° L °संगतिं. 15 L °रचनामङ्के. 16. DL om. वत्स. 18. L श्रेणिनखास्तताक्षत° D °चरो st. °चयो. 19. L पत्रं st. पात्रं. 20. B मदनार्चनाय हितमतिः स्वाङ्गो° 21. C लक्ष्मीकृत्य। 22. L रचितं st. चरितं. 23. D भूयः st. भूम्ना.

तस्यैतत्परमप्रमोदजनकं प्राप्तं फलं कर्मण-
स्तत्किं शास्त्रकलापरमेन किमहो स्वर्गेण मोक्षेण वा ॥ ३२ ॥

इति कामावस्थां नाटयति ।

ला° । सहर्षवैराग्यं स्वगतम् । एसो लम्पडो उन्नुरत्तिआरे लग्गो चित्र पविट्ठो । ता होदु । गुत्तिमहासाहिं वअसोहिं सिक्खाइस्सं । प्रकाशम् । भअवं । तुमं उव उवेक्खिदसंसारसोक्खो मोक्खेक्कमेत्तपराअणो कधं एदारिसे मिअतण्हासरिदे मअणरसे पलिअ अप्पाणं वावादेसि । ता सिक्खीअदु इमादो दुट्ठगणिआसंगमादो ।

वि° । सावज्ञम् । वत्स । मैवम् । पश्य ।

यावद्दृष्टिर्मृगाक्षीणां नो नटीनर्त्ति भङ्गुरा ।
तावज्ज्ञानवतां चित्ते विवेकः कुरुते पदम् ॥ ३३ ॥

अन° । विहस्य । भअवं । अत्ताधीणो क्खु अत्तं जणो । ता किं एत्थ परसरीरदंडं कदुअ अप्पाणं विडम्बेसि ।

वि° । प्रिये । संन्यासिनामस्माकं कुतोऽर्थसंपत्तिः । तदस्मच्छरीरेण यथासुखं विनियोगः क्रियताम् । सानुरागम् ।

बाले मृणालदलकोमलबाहुदण्डे
चण्डि प्रचण्डमदने मयि देहि दृष्टिम् ।
एष त्वदीयवदनाम्बुजकृष्टचेता
दीनो यतिः सपदि मज्जति कामसिन्धौ ॥ ३४ ॥

ला° । भो भअवं । तुमं उव उवेक्खिद° इत्यादि पुनः पठति ।

अन° । संस्कृतमाश्रित्य । भगवन् । अलमत्रात्यन्तानुबन्धेन ।

---

1. L. कामावस्थां, BC कामार्तो. 4. L उन्नुर° D °नुडिअरे भुअंगम इव. B पवि-ट्ठो. DL पइट्ठो. 5. L om. ता. B गुत्तिम्म° (v. f.) सि°, D गुत्तिमुत्तेहिं वअ° DL om. उव. 6. B संसार st. संसार. D मोक्खमग्गलग्गाहिअओ. L मअतिण्हा°, B माअगादसरीते, das ganze Wort f. in D. 7. D मअणरसे दुट्ठगणिआसंगमादो अप्पाणं विहाविअसि. L पलिअ अप्पाणाणं, om. ता. 8 L. पसंगादो त्ति. 9. D मैवं भण । शृणु । L. मैवं पश्यसि । 10. L न st. नो, °नर्ति. 12. L om. ता किं. C इअहदं. 13. DL अप्पाणअं. C विलम्बेसि. 14. DL om. प्रिये. D °शरीरेण 15. B सानुरागः । 17. DL °वदने st. °मदने. D धेहि st. देहि. 18 B दृष्ट st. कृष्ट. 19. D मुनिः st. यतिः 21. D °रागेण, L. °संधानेन st. °बन्धेन.

प्रागर्थं परिगृह्य मोक्षपदवीं ध्यायन्ति निर्मत्सरा
बालप्रौढकुलीनहीनविषये सर्वत्र साधारणाः।
रागद्वेषमनस्कवीतधियः प्रकामा मित्रव-
त्त्वं जानन्नपि निश्चयादहह किं कामार्णवे मज्जसि ॥३५॥

वि०। प्रिये। गृहाणास्मच्छरीरम्। इत्यञ्चले धारयति।

का०। सहसोपसृत्य। अरे रहस्सरण्णा कुट्टपारिजाअआ। एसा पढमं अम्ह-परिग्गहेण तुह पुत्तवहू होदि। ता मुञ्च अञ्चलं।

वि०। विमृश्य। एषास्मत्कुलकुरुपत्नी मातृतुल्या च। तत्किमेनामनुबध्नासि।

का०। सक्रोधम्। अरे लम्पडा। एदं भणन्तस्स दण्डप्पहारेण पक्कमालूरफलं विअ मुण्डं दे घोत्थरं करिस्सं। इत्यन्योन्यं कलहं कुरुतः।

मन०। स्वगतम्। कथं। जुत्तहत्थे पतिदम्हि। होदु एवं दाव। प्रकाशम्। भो म-हाभाअधेआ। तुम्हाणं एदारिसे महाविवादे असज्जादिमित्तो पमाणीकरीअदु।

वि०। प्रिये। एवं भवतु।

का०। पिए। दस टङ्कआ मए दादव्वा। ता तं गेण्हिअ मह मणोरधं संपादेहि। इति ग्रन्थिं दर्शयति।

वि०। अलं ग्रन्थिदर्शनेन। आगच्छतम्। तत्रैव गच्छाम। इति निष्क्रान्ताः सर्वे।

इति प्रथमः संधिः।

---

ततः प्रविशत्यसज्जातिमित्रो विदूषकश्च।

अस०। सप्रमोदम्। त्रैलोक्ये भोजनं श्रेष्ठं ततोऽपि सुरतोत्सवः।
भोजनं चास्तु वा मास्तु जीवनं सुरतं विना ॥३६॥

वत्स बन्धुवञ्चक। आगच्छ। अधीष।

विदू०। जं मित्तो आणवेदि।

1. L प्रागर्थं. 2. L बाल° st. बाल° 3. L वेश्याः सुरा मित्रवो। 4. D नित्यमित्य° st. निश्चयाद° L वस्तुं नन्वापि नित्यमित्य° 6. B कुट्टजआ, L° परिआआ. DC पढमं एसा. 9. DL रे m. अरे, B अले. L एवं एवं, BDC एवं st. एवं. D °प्पहारेहिं. 10. D दे मुण्डं. C मोण्डं. L पत्थरं. a. करइस्सं. 11. L °हत्थपलि°. BC पडिदम्हि. a एवं. L ताव.- 12. a. एआरिसे .. असमज्जाइ° 13. L om. एवं. 16. L दसट°; C दह. a. मणोरहं. 17. L प्रथमा-ह: संधिः। 19. L °मोदनम्। त्रैलोक्यभो° 20. D भोजनं चास्तु मा नास्तु, जी° न रतं वि-ना. L भोजनं वास्तु वा नास्तु ° B रतिं st. सुरतं C नास्तु st. मास्तु, न रतिं st. सु-रतं. 21. D °वञ्चकागच्छाधीष.

अम०। वामावामाक्षीणां पटलमनयनालोकनं केलिरङ्गे
तस्मात्स्याद्यः कुचकलशभरोत्पीडने चाङ्गभङ्गिः।
एतत्संसारसारं कुरु निजहृदये निर्विकल्पैककल्पं
किं ते कार्यं विवादैरलमिति गुरुभिर्जल्पकल्पामरेण ॥ ३७ ॥

विदू०। भो भिस्स। परक्कणासंभोआदो वि परमाहिरं तांचिं कदुअ जं अत्थो अवहरीआदि तं जेव तिहुअणसारं। पेक्ख पेक्ख।

किं वाणिज्जेण कज्जं णिअधणविलअं तं खु काऊण दुक्खं
किं वा कज्जं किसीए पसुचसुणिअणाआलाणिक्कजिदाए।
किं विज्जाए फलं वा मरणसमसमुप्पण्णचिन्ताउलाए
एक्कं तिलोअसारं परधणहरणं जूअकीलासुहं च ॥ ३८ ॥

ता एत्थ जुअअरे जादिसो तुमं गुरू तादिसो अहं सिस्सो संवुत्तो।
अम०। सवैराग्यम्। अहो। नगरेऽस्मिन्निरुपजीविताऽस्माद्विधश्रोत्रियाणाम्। यतो दिनाष्टतयं यावदारभ्य न कश्चिन्न्यायवादी न कपटश्राद्धप्रतिलम्भो न च गणिकाजनालापः।

नेपथ्ये।

भो। विज्ञाप्यतामसज्जातिमिश्रस्य। स्थाने न्यायकरणार्थं वादिनौ द्वारि वर्तेते।
अम०। उच्चैः। वत्स बन्धुवञ्चक। शीघ्रं प्रवेशय वादिनौ।

विदूषको निष्क्रम्य विश्वनगरस्नातकानङ्गसेनाभ्यां पुनः प्रविशति।

अम०। विश्वनगरस्नातकमालोक्य स्वगतम्। कथम्। अनर्थान्तरमापतितम्। प्रकाशम्। भगवन्। आगन्तुका वयम्। तदत्र भिक्षावसरः।
विदू०। भो भिस्स। एदेण्णेव वादिणो। एदाणं विवादं विचारेदु भिस्सो।
अम०। सहर्षं सगर्वं च। आसनमुपनीयतां भगवते स्नातकाय च।

---

1. L रामा st. वामा. 2. L (gegen Hs. तस्मात्) यः स्यात्. D °कलशभरोत्पीडने चाङ्गभङ्गि। 4. L विवादकायितालतनुमातिल° DC आतिजु° 5. B चाराजस्रा °ल्लसंभोश्रादो °गादो. C माद्दिं. B कादुश्र, C कप्पिश्र, om. अत्थो. DC हरीअदि st. अवहृ°6. B°साणं st. सारं. D यो v. पेक्ख. 7. C णेअहणविलअं. B तंक्खु st. तं खु. 8. BC पसु-अणसिअरासालाणि° D°णिअयाअरासिप्पादिदाए, L णिक्काजदाए. 9. B मरण° st. मरण° 10. LC तेलोअ. BC दूअ st. जूअ. 11. B जु° जु° तारिसो सिक्खाहं सं° L जुतउरमअरे, C °अअणाअरे DC सिक्खो. 12. BL अस्मिन्नगरे. B निरुपाधिजीवितमस्म°, L निरुपाधिजीवनतास्म°, C निरुपजीवनमस्म° 13. L om. यतो. D दिनाष्टकमारभ्य, L °त्रयादारभ्य. कपट st. करट, गणिकालापः C om. 17–20. 17. L om. शीघ्रं

मृगमदघनसारासक्तगौर...
हरति मदनतापं कोमलः पाणिरस्याः ॥४४॥

अथ विचार्यो ऽयं वृत्तान्तः। भो नाडितौ। एतन्नाटकस्य मध्ये पुरुषयोर्विवादः। तथा हि।
नैषा वदीया भवतो ऽपि नेयं मत्सां निपीडिता सुभगा नदीना।
त्वत्तो ऽपि पूर्वं मयि जातकौतुकेऽन्तितो ऽपि हेतोः खलु वल्लभा मे ॥४५॥

विदू०। अनङ्गसेनामालोक्य। जनान्तिकम्। भो सुन्दरि। एसो मिस्सो वुड्ढो अअवं वि-डओ मसारदयो मिच्छावन्दणो। ता एदस्स समागमं परिहरिअ अम्हसमागमेण अत्त-णो जोव्वणं सफलेहि। इत्यात्मानं दर्शयति।

अन०। नाम्मितम्। एदं जुत्त समागमपहरणं संवुत्तं।

विश्व०। सवैराग्यम्। वत्स दुराचार। नाहि अलौकसामञ्जसं अलौकिका लगति। मूलना-शकस्यायं विचारः। तदेहि। सुरतप्रियात्स्थानमेव गच्छाव। इति निष्क्रान्तौ।

प्रविश्यापटीक्षेपेण मूलनाशकः। अले अले असज्जणेणिए। जाणिदे तुम्हे चालिदे जंत नं वालं कअमअअसमन्दिवखोलवेदणं पत्थन्ते बड्डवालं हगे तए पआलिदे। ता संपदं पअच्छ। अयधा णाअदोहाइं दाव दावइस्सं।

अन०। मूलनासअ। संपदं जेव्व अज्जणाहिडिम्मिस्साडो अप्पणो धणलम्भेण तुह दा-वइस्सं। ता सुत्थो होहि।

विदू०। को एसो दुट्ठदंसणो दुट्ठचरिदो दुट्ठवअणो।

असं०। एष किं भगवदगोचरः। पश्य।

छिन्नैडनाडो गलगण्डनम्रो वामाक्षिकाणो गलितैकहस्तः
शिलीपदव्यापृतदक्षिणाङ्घ्रिः स मूलनाशः किल नापितो ऽसौ ॥४६॥

मूलनाशकः सहसोपसृत्य सर्वेषां स्वरणामप्यादर्शं दर्शयति।

असं०। मूलनाशक। क्रियतामस्माकं नखलोम्नां परिष्कारः।

मू०। पढमं वेदणं पअच्छ।

असं०। मूलनाशक। किमर्थम्।

मू०। भो। जइ तुमं पालिक्खलन्ते पढमं जेव्व मालिस्साशि ता वेदणं कुदो पाविदव्वं।

3. L राअ, all others ह्वेते, L भुजेगमोरू, C मव्वाअसोरू. 5. B जातकोऽस्तिगतोऽपि 6. D सुंद-रिए L वुड्ढो. 7. D संसारदेशो st. मशारदो. L तिसादओ असारअणे. B पाविहरिअ अ-म्हाणं स° L °णेण तुह जो° सफलं होदु। 9. BDC °समागमं संवुत्तं. 11. DC °कयाचन्, BC °मनस्य विचारकः। L विचारा एव भवन्त ग° 12. BC °लोणिए, तुहु. L चलिदे, D कारिदे. 13. D न° तुहमन्दिर (D। रे) सोलवेअणं. B om. सोल. C मदिरेक्षाणलवदणं. B पत्थअन्तो C पत्थन्तो. BC अम्हे, L हगे st. हगे. L पआलिदे. 14. B णाअरासो, C राओ st. णाअ° D दे st. दाव. B दास्सं, DLC दाइस्सं. 15.16. B अप्पणो हत्थेण दाणं दाइस्सं L णाअरो तुह दाइस्सं। C अप्पाणो त्थाणे तुहु वेदणं दाइस्सं. B सुही st. सुत्थो. 17. BC दुट्ठचालिदो दुट्ठवअणो. 18. D आ किमेव BD भवद° st. भगवद°. 19. B °दन्तः st. हस्तः 22. C नखलोमप° 23. BD भो प° 25. D पालिक्खलन्ते. L किल, C केण उण st. कुदो. D पविदव्वं, L पइस्सिदव्वं।

अस॰। अलं परिहासेन। गृह्यतामिदं पारितोषिकम्। इति कौलिकादाकृष्य गञ्जाकिनीं ददाति। मूलनाशकः सगौरवं गृहीत्वा सप्रमोदमाघ्राय किंचिद्विनियुज्य मिश्रस्य करचरणयोर्बन्धनं कृत्वा व्यापारं नाटयति।

अस॰। सवेदनम्। दलति हृदयमेतन्मोहमभ्येति चेतः
स्फुटति सकलदेहे कीकसग्रन्थिसंधिः।
विरम विरम शिल्पान्मूलनाश त्वमस्मा-
च्छिव शिव मम सद्यो जीवनं त्रुट्यतीव ॥४७॥

मू॰। चालयित्वा। कधं। मलिदे अक्खलादिमिश्शे। ता भोदु। लहुं लहुं अवक्कमिश्शं। इति निष्क्रान्तः।

विदू॰। मिश्रस्य करचरणयोर्बन्धनमपनीय। भो। आणवेदु मिस्सो। किं अवरं तुह पिअं णिव्वाहइस्सं।

अस॰। संज्ञां लब्ध्वा।

राष्ट्रं समस्तं कपटेन भुक्तं धूर्तक्रियाभिर्दयितेयमास्ता।
भवान्विनीतो मिलितश्च शिष्यो नातः परं नः प्रियमस्ति लोके ॥४८॥

तथापीदमस्तु।

काले संततवर्षिणो जलमुचः सस्यैः समृद्धा धरा
भूपाला निजधर्मपालनपरा विप्रास्त्रयीनिर्भराः।
स्वादुक्षीरनतोधसः प्रतिदिनं गावो निरस्तापदः
सन्तः शान्तिपरा भवन्तु कृतिनः सौजन्यभाजो जनाः ॥४९॥

इति निष्क्राताः सर्वे।

द्वितीयः संधिः।

---

1. BD परीहासेन, C परिहासेनालं। D कोरकाद्, C टोपराद् st. कौ॰ 3. B om. कर. 7. DL शिव st. मम. L कुट्यतीव. 8. L om. ता भोदु, लहू. 10. DL om. किं. L उ n. अवरं. 19. C सुखिनः st. कृतिनः.